विविदिषासंन्यासे जन्मप्रदातॄणां काम्यकर्मणां परित्यागस्तथापरप्रकारके विविदिषा-संन्यासे प्रैषोच्चारणादिपूर्वकं दण्डधारणाद्याश्रमग्रहणमावश्यकम् । उद्दालकश्वेतकेतुसनत्कुमारनारदादयः श्रुतिप्रसिद्धाः अर्जुनादयश्च स्मृतिप्रथिता ज्ञानिनो विविदिषासंन्यासस्योदाहरणत्वेन गणयितुं शक्यन्ते ।

विद्वत्संन्यासस्योपपादनं परमहंसोपनिषदि परिदृश्यते । परमहंससंन्यासस्य द्वितीयोऽयं भेदः । सोपानक्रमेण विविदिषयाऽऽत्मज्ञाने सति विद्वत्संन्यासः संगच्छते मैत्रेय्यानुमतो याज्ञवल्क्यगृहीतः संन्यासो विद्वत्संन्यासस्य दृष्टान्तः । विविदिषा-सन्यासो ज्ञानप्राप्तेरिच्छया विद्वत्संन्यासश्च ज्ञाने सति गृह्यत इत्युभयोरन्तरम् । विद्वत्संन्यासं विवेचयन् विद्यारण्यमुनिराह—"सन्यगनुष्ठितैः श्रवणमननिदिध्यासनैः परमतत्त्वं विदितवद्भिः सम्पाद्यमानो विद्वत्संन्यासः"[1] इति ।

इत्थं ब्रह्मविद्याधिकारिणा मुमुक्षुणा परमहंसपरिव्राजकेन भवितव्यमिति सुचिन्तितः शङ्करसिद्धान्तःशांकरसम्प्रदायावलम्बिभिरितरैरप्याचार्यैरद्वैतिभिः समर्थितः सुदृढीकृतश्चेति स्पष्टतामायाति ब्रह्मविद्याधिकृताधिकारनिरूपकतत्तद्-ग्रन्थानामनुशीलनेति शम् ।

---

१. तत्रैव पृ० २६